# काव्यं नाम किम् ?

- कलासीमा काव्यम् ।
- काव्यं वक्तुः हृदयस्थभावप्रतिबिम्बरूपम् ।
- रुचिरगुणालङ्कारसहितत्वात् विद्वन्मनोमोहनत्वात् सौन्दर्यत्वात् च चेतांसि आकर्षयति ।
- विविधशास्त्रावगाहिज्ञानमपि निगूढम् ।
- काव्यादेरध्ययनात् रसास्वादः आनन्दानुभूतिश्च प्राप्यते ।

# काव्यस्वरूपम्

तद्दोषौ शब्दार्थौं सगुणावनलङ्कृती पुनः क्वापि । (काव्यप्रकाशः)

तथा च -

वाक्यं रसात्मकं काव्यम् । (साहित्यदर्पणः)

# काव्यप्रयोजनम्

चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।

काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ।। (साहित्यदर्पणः)

तथा च -

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।

सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।। (काव्यप्रकाशः)

# काव्यहेतुः

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ।।

# शब्दव्यापारः

1. वाचकः - वाच्यार्थः - अभिधा
2. लक्षकः - लक्ष्यार्थः - लक्षणा
3. व्यञ्जकः - व्यङ्ग्यार्थः - व्यञ्जना

# काव्यभेदाः

**काव्यं त्रिधा विभज्यते -**

- उत्तमम् ।
- मध्यमम् ।
- अधमम् ।

# उत्तमकाव्यम्

इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्यात् ध्वनिर्बुधैः कथितः ।

**उदाहरणम् -**

निःशेषच्च्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्य अज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनः
तस्याधमस्यान्तिकम् ।।

अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते ।

# मध्यमकाव्यम्

अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।

उदाहरणम् -

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ।।

अत्र वञ्जुललतागृहे दत्तसङ्केता न गतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ।

# अधम / अवरकाव्यम्

शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं तु अवरं स्मृतम् ।

गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ।

# शब्दचित्रम्

उदाहरणम् -

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्छन्मोहमहर्षिहर्ष-
विहितस्नानाह्निकाह्नाय वः ।

भिद्यादुद्यदुदारदर्दुरदरी दीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी
मन्दताम् ।।

# वाच्यचित्रम्

उदाहरणम् -

विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् ।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ।।

# छन्दोबद्ध-छन्दोरहितकाव्यप्रकारौ

## (i) छन्दोबद्धकाव्यम् -

पद्यं चतुष्पदी तच्च वृत्त-जातिरिति द्विधा ।
वृत्तमक्षरसङ्ख्यातं जातिर्मात्रा कृता भवेत् ।।

# काव्यस्य शास्त्रत्वम्

- शास्ति इति अथवा शिष्यते अनेन इति शास्त्रम् ।
- काव्यकरणविधिः यत् प्रतिपादयति तत् काव्यशास्त्रम् ।
- काव्यक्रिया इत्थं भवेत्, अस्य लक्षणानि, नियमाश्च इमे इति यत् शास्ति तदेव काव्यशास्त्रम् ।
- ‘पञ्चमी साहित्यविद्या' इति तथा 'शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या' इति राजशेखरः ।
- विषयसत्वात्, प्रयोजनसत्वात्, पुरुषार्थपर्यवसानात्, कर्तव्यताबोधकवैदिकप्रमाणसत्वाच्च तस्य शास्त्रत्वमिति विदुषां मतम् ।

